प्रकाशक : मो. द. नांबुरकर
अनमोल प्रकाशन,
६८३ बुधवार पेठ, पुणे ४११००२.

प्रथमावृत्ती ऑक्टोबर १९९१ (विजया दशमी)
पुनर्मुद्रण डिसेंबर १९९८ (दत्तजयंती)

मुद्रक : वैभव बर्वे
श्री वेदविद्या मुद्रणालय प्रा. लि.
४१ बुधवार पेठ, जोगेश्वरी लेन, पुणे ४११००२.

# दत्तात्रेयकल्पस्य अनुक्रमणिका लिख्यते.

श्रीगणेशाय नमः ॥ ॥ अथ आसनविधिः प्रारभ्यते ॥ ईश्वर उवाच—आसनानि पृथग्वक्ष्ये शृणु वाचस्पतेऽधुना ॥ स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा ॥ १ ॥ भद्रं मुक्तासनं चैव मयूरासनमेव च ॥ सुखासनसमाख्यां च नवमं मुनिपुंगव ॥२॥ जानूर्वोरंतरे विप्र कृत्वा पादतळे उभे ॥ समग्रीव-शिरः-कायः स्वस्तिकं परिचक्षते ॥ ३ ॥

टीका—यम-नियमानुक्त्वा क्रमप्राप्तमासनं बृहस्पतिंप्रति वक्तुमीश्वरः प्रतिजानीते आसनानीति ॥ तानि नव तावदुद्दिश्यति गोमुखमित्यादिना ॥१॥२॥ स्वस्तिकस्य लक्षणमाह । जानूर्वोरिति ॥ दक्षिणजानूरुमध्ये वामपादतळं । वामजानूरुमध्ये दक्षिणपादतळं विन्यस्य ऋजुकाय उपविशेदेतत्स्वस्तिकमासनमित्यर्थः ॥ ३ ॥

वामे दक्षिणगुल्फं तु पृष्ठपार्श्वे निवेशयेत् ॥ दक्षिणेपि तथा सव्यं गोमुखं परिचक्षते ॥ ४ ॥ अंगुष्ठावपि गृण्हीयाध्धस्ताभ्यां व्युत्क्रमेण तु ॥ ऊर्वोरुपरि विप्रेंद्र कृत्वा पादतलद्वयं ॥ ५ ॥ पद्मासनं भवेदेतत्पापरोगभयापहं ॥ दक्षिणोत्तरपादं तु सव्ये ऊरूणि विन्यसेत् ॥ ६ ॥

टीका—गोमुखासनलक्षणमाह । वाम इति ॥ सव्ये-वामे तस्मिन् पृष्ठे पार्श्वे दक्षिणगुल्फं दक्षिणे च पृष्ठे-पार्श्वे सव्यं वामं विन्यसेदेतद्गोमुखमासनं॥४॥ अंगुष्ठावपीति ॥ दक्षिणस्योरोरुपरि वामपादतळं विन्यस्य तदीयमंगुष्टं पश्चि-मपथागतेन वामहस्तेन गृण्हीयादेवं वामस्य ऊरोरुपरि न्यस्तस्य दक्षिणपा-दतळस्य अंगुष्टं पश्चिमपथागतेन दक्षिणहस्तेन गृण्हीयादेतत्पद्मासनमुक्तफ-लदमित्यर्थः ॥ ५ ॥ वीरासनलक्षणमाह । दक्षिणेति ॥ दक्षिणमुत्तरपादं नाम पादाग्रं सव्ये-वामोरौ विन्यसेदेतच्चोपलक्षणं ॥ ६ ॥

दक्षिणोत्तरपादं तु दक्षिणोरूणि विन्यसेत् ॥ ऋजुकायः सुखा-
सीनो वीरासनमुदाहृतं ॥ ७ ॥ गुल्फौ तु वृषणस्याधः सीवन्याः
पार्श्वयोःक्षिपेत् ॥ दक्षिणं सव्यगुल्फेन वामं दक्षिणगुल्फतः॥८॥
हस्तौ च जान्वोःसंस्थाप्य स्वांगुलीश्च प्रसार्य च ॥ नासाग्रं च
निरीक्षेत भवेत्सिंहासनं हि तत् ॥९॥ पार्श्वपादौ च पाणिभ्यां
दृढं बध्वा सुनिश्चलं॥ भद्रासनं भवेदेतद्विषरोगविनाशनं॥१०॥

टीका—सव्ये वामं दक्षिणोरौ एतद्वीरासनं। आगमेचोभयमुक्तं॥ ऊर्वोरुपरि
कुर्वंति पादौ वीरंचेति ॥ ७ ॥ सिंहासनलक्षणमाह । गुल्फाविति ॥ सीवन्या
वामपार्श्वे दक्षिणगुल्फं दक्षिणपार्श्वे च वामगुल्फं प्रसारितांगुलिहस्तौ
जानूर्ध्वं न्यस्य नासाग्रदर्शनं सिंहासनं ॥८॥ ॥९॥ भद्रासनलक्षणं व्यनक्ति ।
पार्श्व इति ॥ सीवन्या वामपार्श्वे वामगुल्फं दक्षिणपार्श्वे दक्षिणगुल्फं

निष्पीड्य सीवनीं सूक्ष्मां दक्षिणोत्तरगुल्फतः ॥ वामं वामेन गु-
ल्फेन मुक्तासनमिदं भवेत् ॥ ११ ॥ मेढ्रोपरि विनिक्षिप्य सव्यं
गुल्फंततोपरि ॥ गुल्फांतरं च संक्षिप्य मुक्तासनमिदं भवेत् १२
कूर्पराग्रौ मुनिःश्रेष्ठ निक्षिपेन्नाभिपार्श्वयोः ॥ भूम्यां पादतळद्वंद्वं
निक्षिप्यैकाग्रमानसः ॥ १३ ॥ समुन्नताशिरःपादो दंडवद्व्योम्नि
संस्थितः ॥ मयूरासनमेतत्स्यात्सर्वपापप्रणाशनं ॥१४॥

यथा भवति तथा पादतळे परस्पराभिमुखे सीवन्या अधस्ताद्विनिवेश्य
दक्षिणोरुं दक्षिणपाणिना वामोरुं वामपाणिना सम्यक् निपीड्य अत्रस्थानं
भद्रासनमित्यर्थः ॥ १० ॥ सीवन्या अधस्ताद्वामो गुल्फस्तस्याधस्तादक्षिण
अथवा मेढ्रस्योपरि सव्यो गुल्फः, तस्योपरि दक्षिण इति द्वेधा मुक्तासनमाह ।
निष्पीड्य सीवनीमिति ॥११॥१२॥ कूर्पराविति ॥ तथा चागमे–भूम्याम्

एनकेन प्रकारेण सुखं धैर्यं च जायते ॥ तत्सुखासनमित्युक्तमशक्तस्तत्समाश्रयेत् ॥ १५ ॥ आसनं विजितं येन जितं तेन जगत्त्रयं ॥ आसनं सकलं प्रोक्तं मुने वेदविदां वर ॥१६॥ अनेन विधिना युक्तः प्राणायामं सदा कुरु ॥ १७ ॥ इति श्रीस्कंदे सूतसंहितायां टीकायां आसननिरूपणं नाम पंचदशोध्यायः ॥

पादतळे कृत्वा कूर्परौ नाभिपार्श्वगौ ॥ समुन्नतशिरःपादं दंडवव्द्योमसंश्रयं ॥ कुर्याद्देहमिति प्रोक्तं मयूरं पापनाशनं ॥ १३ ॥ १४ ॥ एनकेनेति । तथाच पातंजलं सूत्रं 'सुस्थिरं सुखमासनम्' इति ॥१५॥ जगत्त्रयमिति ॥ आसनजयस्य चित्तैकाग्रहेतुत्वाच्छीतोष्णादिद्वंद्वैरनुपघाताच्च ॥ आसनपातांजलिः ॥ ततो द्वंद्वानभिघात इति ॥१६॥ अनेनेति ॥ आसनवतैव हि प्राणायामः कर्तव्य इत्याहुः ॥ विधिनेति ॥ श्वास-प्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ १७ ॥

## अथ देवीभागवतोक्त आसनविधिः—

पद्मासनं स्वस्तिकं च भद्रं वज्रासनं तथा ॥ वीरासनमिति प्रोक्तं क्रमादासनपंचकम् ॥ १ ॥ ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे ॥ अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः ॥ ॥ २ ॥ पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥ जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ॥३॥ ऋजुकायो विशेद्योगी स्वस्तिकं परिचक्षते ॥ सीवन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चितः ॥ ४ ॥ वृषणाधः पाद-पार्ष्णि-पाणिभ्यां परिबंधयेत् ॥ भद्रासनमिति प्रोक्तं योगिभिः परिपूजितम् ॥५॥ ऊर्वौ पादं क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुली ॥ करौ विदध्यादाख्यातं वज्रासनमनुत्तमम् ॥६॥ एकपादमधः कृत्वा विन्यस्योरु तथोत्तरे ॥ ऋजुकायो विशेद्योगी वीरासनमनुत्तमम् ॥७॥ इति

# अथ श्रीविभूतिधारणविधिः

श्रीदत्तमूर्तये नमः ॥ अस्य श्रीविभूतिधारणमंत्रस्य पिप्पलाद ऋषये नमः शिरसि ॥ गायत्रीच्छंदसे नमः मुखे ॥ रुद्रदेवतायै नमः हृदये ॥ भस्मधारणे विनियोगः ॥ वामकरे विभूतिं गृहीत्वा दक्षिणकरेण पिधाय ॥ ॐ जातवेदसेत्यग्निः ॥ अग्निरिति भस्म ॥ जलमिति भस्म ॥ स्थलमिति भस्म ॥ वायुरिति भस्म ॥ व्योमेति भस्म ॥ काल-दिङ्-मनश्चक्षुंषिसर्वं ँ हवाइदं भस्म ॥ त्र्यायुषंजमदग्ने ॥ कश्यपस्यायुषं शतायुषं बलायुषं ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ॥ ॐ हौं जूं

सः ॐ भूर्भुवः स्वः ॥ ॐ त्रियंबकं यजामहे सुगंधिं पुष्टिवर्धनं ॥
उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ सुवः भुवः भूः
ॐ सः जूं हौं ॥ ॐ सद्योजातंप्रपद्यामि सद्योजातायवैनमः ॥
भवोभवेनाति भवोभवस्व मां भवोद्भवाय नमः ॥ ॐ वामदेवाय॰
मनोन्मनाय नमः ॥ तत्पुरुषाय विद्महे । महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥ ॐ ईशानः सर्वविद्यानाम् ईश्वरः
सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु
सदाशिवोम् ॥ ॐ ऋतꣳसत्य परं ब्रह्म पुरुषं कृष्णपिंगलम् ॥
उर्ध्वरेतं विरूपाक्षं विश्वरूपं नमोनमः ॥ ॐ योरुद्रोअग्नौ॰ नमो-
अस्तु ॥ इति द्वादशमंत्रैरभिमंत्र्य ॥ ॐ आपोहिष्ठा॰ चनः ॥
इत्यभिषिंच ॥ विश्वंभूतंभुवनं॰ नमोअस्तु ॥ इति मर्दयित्वा

अंगुष्ठाग्रे मूलं लिखित्वा ॥ मध्यमानामिका चैव तर्जनी च त्रिपुंड्रके॥ ब्रह्मा विष्णुश्च रुद्रश्च त्रिपुंड्रस्याधिदेवताः ॥ वर्तुलेन भवेव्द्याधिर्दीर्घेण च तपःक्षमम् ॥ षडंगुलप्रमाणेन तिर्यक्पुंड्र समाचरेत् ॥ दीप्तचंडाय नमः ॥ ललाटमध्ये रेखां कृत्वा मूल-विद्यां शिरसि ॥ ॐ ऐं ह्रीं श्रीं ऐं वद वद वाग्वादिनी ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः महाक्षोभं कुरु कुरु सौः ह्सौं दीप्पिन्यै नमः ललाटे ॥ ॐ नमो भगवति ज्वाला-मालिनी देवी सर्वभूतसंहारकारके जातवेदसि ज्वलंतिज्वलंति ज्वलज्वल प्रज्वलप्रज्वल हुंहुंहु रंरंरं हुंफट् स्वाहा ॥ गले ॥ ॐ ह्रीं उत्तिष्ठ पुरुषि किं स्वपिषि भयं मे समुपस्थितं यदि शक्य-मशक्यं वा तन्मे भगवति शमय स्वाहा ॥ ॐ ह्रीं वन्हिवासिन्यै

नमः ॥ ह्रदये ॥ ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चेस्वाहा ॥ नाभौ ॥
ॐ स्त्रूं सहस्त्रार हुं फटू स्वाहा ॥ ऊरुमूलयोः ॥ ॐ श्लीं पशु हुं
फटू स्वाहा जान्वोः ॥ ॐ ह्रीं स्फुरस्फुर प्रस्फुर घोरघोरतरत-
नुरूप चटचट प्रचटप्रचट कहकह वमवम बंधबंध घातय
घातय हुंफटू स्वाहा ॥ इति गुल्फयोः ॥ ॐ ऐं ॐ ह्रीं क्लीं क्ष्रौं
श्रीं ॥ उग्रं वीरं महाविष्णुं ज्वलंतं सर्वतोमुखम् ॥ नृसिंहं भीषणं
भद्रं मृत्योर्मृत्युं नमाम्यहम् ॥ इति बाव्होः ॥ क्ष्रौं ॐ नमो भग-
वते नृसिंहाय ज्वालामालिने दीप्तदंष्ट्रायाग्निनेत्राय सर्वरक्षोघ्नाय
सर्वभूतविनाशाय सर्वज्वरविनाशाय दहदह पचपच रक्षरक्ष
हुंफट् स्वाहा ॥ इति कूर्परयोः ॥ उत्तिष्ठ पुरुष हरित-पिंगल-लोहि-
ताक्ष देहि मे दापय स्वाहा ॥ मणिबंधयोः ॥ ॐ ह्रीं ह्रौं नमः

शिवाय महाशरभाय ॐ ह्रीं ह्रौं नमः शिवायै महाशरभ्यै विघ्नशांत्यै नमः ॥ सर्वांगे ॥ अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं ॥ इति मातृकायाः सर्वसंधिषु विन्यसेत् ॥ इति विभूतिधारणविधिः समाप्ता ॥

## प्राणायामविधिः

श्रीगणेशायनमः ॥ पचांगुलीभिर्नासाग्रं पीडयेत्प्रणवेन वै ॥ पूरयेत्सर्वपापघ्नं ॥ वानप्रस्थगृहस्थयोः ॥ १ ॥ कनिष्ठानामिका-भ्यां च अंगुष्टं च तृतीयकं ॥ प्राणायामं समुन्नेयं मध्यमं तर्जनीं विना ॥ २ ॥ कनिष्ठानामिकांगुष्टे यती च ब्रह्मचारिणाम् ॥

# अथ श्रीदत्तकल्पः प्रारभ्यते.

श्रीगणेशाय नमः॥ किरातरूपी भगवान् कदाचिद्गिरिजापतिः॥ कदाचिदिष्टलाभेषु पार्वत्या पृष्ट ईश्वरः ॥ १ ॥ त्वत्तःश्रुतानि सर्वाणि मंत्रजालानि कृत्स्नशः ॥ आदावभ्रमतीमंत्रः तत्पश्चाद्भद्रसावती ॥ २ ॥ ततो धूमावतीमंत्रः ततो वाराहिको मनुः ॥ मंत्रोपि बगळो मुख्यो सर्वमंत्रोत्तमो मनुः ॥ ३ ॥ अष्टधायाक्षिणीमंत्रास्सांगोपांगास्समीरिताः ॥ कार्तवीर्यार्जुनस्यापि मंत्रास्सांगमुदीरिताः॥४॥ अपेक्षा वर्तते श्रोतुं दत्तात्रेयस्य योगिनः॥ मंत्रान् फलप्रदांच्छीघ्रान्नियमैर्बहुळैर्विना ॥५॥ शबररूपी शंकर उवाच–शृणु वक्ष्यामि शबरी कबरीभरशोभिते ॥ समाहितमना भूत्वा समाकर्णय तन्मनून् ॥ ६ ॥ न वै नियमबाहुल्यं तर्पणस्य

बाहुल्यं तर्पणस्य च ॥ पूर्वसेवाप्रयासो वा नास्ति नास्त्येव सर्वदा ॥ ७ ॥ सर्वदा ध्यानयोगेन ब्राह्मणानां च भोजनात् ॥ सर्वत्र तन्मयज्ञानात्तस्य चारित्रकीर्तनात् ॥ ८ ॥ मंत्रसिद्धि-र्भवेच्छीघ्रं वांछितार्थप्रदायिनी ॥ द्वादशाक्षरमंत्रश्च प्रोक्तः स्यात् षोडशाक्षरः ॥ ९ ॥ षडक्षरमनुः पश्चात्तत एकाक्षरो मनुः ॥ अष्टाक्षरमनुः पश्चाद्विंशद्वर्णमनुस्तथा ॥ १० ॥ अनुष्टुभं ततः पश्चान्मालामंत्रस्ततःपरम् ॥ एवमष्टविधा मंत्रा दत्तात्रेयस्य योगिनः ॥ ११ ॥ शीघ्रमिष्टार्थदातारस्तत्रापि च कलौयुगे ॥ भोगीभवेत्सुभोगी च चिरजीवी च जायते ॥ १२ ॥ तन्मंत्र-जापको मर्त्यः अणिमाद्यष्टसिद्धिमान् ॥ अंजनाकर्षणादृश्या दृश्यवादौपयास्थितिम् ॥ १३ ॥ दूरश्रुतिं दूरदृष्टिं सुदूरगमनं

तथा ॥ साक्षान्मधुमती शक्तिः प्रसन्नस्य प्रयच्छति ॥ १४ ॥ पाताळलोकसंचारो बिलसित्धा प्रजायते ॥ महिम्ना खेचरत्वा-दिसंचारः सर्वकामदः ॥ १५ ॥ सर्वत्र सर्वदा सर्वं वेत्ति ज्ञान-प्रभावतः ॥ सप्तकोटिमहामंत्राः कलान्नार्हंति षोडशीम् ॥ १६ ॥ इंद्रादयः प्रसन्नाः स्युः व्यासादिमुनिपुंगवाः ॥ शक्तयश्च चतुः-षष्टि प्रसन्नाःस्युः क्रमक्रमात् ॥ १७ ॥ त्रयस्त्रिंशत्कोटिदेवाः प्रसन्नाः स्युस्ततःपरम् ॥ शंभुः-स्वयंभुर्विष्णूनां सन्निधौ च दिनंचरेत् ॥ १८ ॥ नरःस्त्रियोनुधावंति मोहितास्त्रिविधा स्त्रियः॥ कार्यसित्धिमहिम्ना यो भवेत् षोडशवर्षवान् ॥ १९ ॥ नासाध्यं विद्यते तस्य त्रिषु लोकेषु दुर्लभम् ॥ यशस्वी महिमोपेतो जीवे दाचंद्रतारकम्॥२०॥हेमाविद्याराजविद्या घुटिकासिद्धिसिद्धयः ॥

दत्तात्रेयमनुर्यस्य तस्य सिध्द्यंत्यसंशयः॥२१॥श्रीपार्वत्युवाच-
द्वादशार्णमनोद्धारमाचक्ष्व मम शंकर॥ श्रीशंकर उवाच-आदौ
प्रणवमुच्चार्य पाशबीजमथोद्धरेत्॥ २२ ॥ हृल्लेखामुद्धरेत्पश्चात्त-
त्पश्चान्मदनांकुशः॥ एहीति पदमुच्चार्य दत्तात्रेयस्ततः परम्
॥ २३ ॥ वन्हिजायां ततः पश्चान्मंत्रोयं द्वादशाक्षरः ॥
मंत्रराज इति ख्यातो दत्तात्रेयस्य योगिनः ॥ २४ ॥ उद्धार-
ज्ञानमात्रेण सर्वं सिध्यति मंत्रिणः॥ पार्वत्युवाच-जपः कियान्
कियान् होमः तर्पणं कियदुच्यते॥ ब्राह्मणाः कति भोक्तव्याः
समाचक्ष्व सविस्तरम्॥२५॥ शंकर उवाच-द्वादशाक्षरसंख्या-
कजपात्सिध्यत्ययं मनुः ॥ चातुर्वर्णाधिकारोयं दत्तात्रेयमनु-
र्भवेत्॥ २६ ॥ गुरूपदेशमात्रेण मंत्रसिद्धिर्भवेध्द्रुवम् ॥ सिद्धः-

साध्यस्सुसिद्धारिः शोधना नात्र विद्यते ॥ २७ ॥ पुस्तकं लिखितं दृष्ट्वा कृत्वानुज्ञापुरःसरम् ॥ जप्तव्योयं महामंत्रः शीघ्रं सिध्यति पार्वति ॥ २८ ॥ अर्क १२ संख्या सहस्रस्य होम-संख्या प्रकीर्तिता ॥ साज्यपायसहोमेन वैष्णवाग्निसमाचरेत् ॥ २९ ॥ होमायाः पूर्वसेवायाः काम्यहोम इहोच्यते ॥ आज्यं त्रिमधुरोपेतं वश्यजालादिकर्माणि ॥ ३० ॥ पारिभद्रस्य पत्राणि तैलाक्तानि निरोधने ॥ विभीतपल्लवैरुष्ट्रारोमभिश्वाटनं भवेत् ॥ ३१ ॥ ग्रहधूमेन सिद्धार्थैर्बीजैः कार्पाससंभवैः ॥ लशुनापिष्टसंयुक्तैः पापकर्मप्रणाशनम् ॥ ३२ ॥ लवणं मधुरद्रव्ययुक्तमाकृष्टकारणम् ॥ हरिद्राहरिताळैश्च दुष्टसंस्तंभनं भवेत् ॥ ३३ ॥ अष्टद्रव्यै रोचनाद्यैः शीघ्रं दारिद्र्यनाशनम् ॥

रक्तैश्च दूर्वमंदारकुसुमैर्मधुसंयुतैः ॥ ३४ ॥ राजवश्यं भवेच्छीघ्रं यावज्जीवार्थदायकम् ॥ भूतशांतिर्गुग्गुलाभिः रामठेनाथवा भवेत् ॥ ३५ ॥ अपामार्गवटाहोमात्पंचगव्यसमन्वितात् ॥ कृत्यास्सर्वे विनश्यंति व्याधयोपि महाग्रहः ॥ ३६ ॥ दूर्वांकुर-मृतावल्लीकांडानि चतुरंगुलम् ॥ गोघृतानि नियुक्तानि सर्वरो-गप्रशांतये ॥ ३७ ॥ एरंडकांडैराज्याक्तैः गणवश्यः प्रजायते ॥ ब्रह्मवृक्षसमिद्भिस्तु द्विजवश्यः प्रजायते ॥ ३८ ॥ चूतपल्लवहो-मेन वेश्यावश्यं प्रजायते ॥ सिध्यंति सर्वकर्माणि गवामाज्यैस्तु रोचनैः ॥ ३९ ॥ सिध्यंति रक्तवस्त्राणि जपाकुसुमहोमतः ॥ चांपेयकुसुमैः पीतैः केतकीकुसुमैस्तथा ॥ ४० ॥ विष्णुक्रांति-प्रसूनैश्च नीलवस्त्राणि साधयेत् ॥ तत्तद्वर्णप्रसूनैश्च तत्तद्वर्णसु-

स्वागमः ॥ ४१ ॥ ये ये यद्यद्यथा चित्रे भावयेत्तत्तथा भवेत् ॥ शृणु गुह्यतरं लोके षट्कर्मविधिसाधनम् ॥ ४२ ॥ वश्ये तु चतुरस्त्रं स्यादाकर्षे तु त्रिकोणकम् ॥ स्तंभने वर्तुळं देवी षट्कोणं नाशनं स्मृतं ॥ ४३ ॥ पंचकोणं च विद्वेषे तथैवोच्चाटने स्मृतम् ॥ ज्ञात्वा त्रिवर्षपर्यंतं पापकर्माणि निष्ठितम् ॥ ४४ ॥ तथा प्रयोगं कुर्वीत तथापि नहि मारणम् ॥ देव-ब्राह्मण-बाल स्त्री-धन-धान्य-पशुक्षयम् ॥ ४५ ॥ एतदेकस्य राष्ट्रस्य परदेशाधिपेनचेत् ॥ तदा तन्मारणं कुर्याद्गो-ब्राह्मणहिताय वै ॥ ४६ ॥ द्वेषमात्रेण कर्तव्यं स्वयमेव विनश्यति ॥ दत्तात्रेयस्स भक्ताय शांतस्सर्वहितैषिणे ॥ ४७ ॥ परघातं नकुर्वीत दयामेव प्रकुर्वते ॥ कोपे कदाचिज्जातेपि शांतिमायाति तत्क्षणात् ॥ ४८ ॥

दत्तात्रेयो महायोगी शांतिमेव प्रयच्छति ॥ कोपेनतीव्रयोगः स्यात्तस्य कोपो नविद्यते ॥ ४९ ॥ दत्तात्रेयसमो भूत्वा योगी चरति मंत्रवान् ॥ प्रयोगमंत्रसामर्थ्यं ज्ञापनार्थमुदीरितम्॥५०॥ तर्पणस्य च वै संख्या सहस्त्रं द्विशतोत्तरम् ॥ शतं विंशति संयुक्तं संख्या स्याद्विजभोजने ॥ ५१ ॥ मंत्रसिद्धिर्भवेदेव जपात्धोमाच्च तर्पणात् ॥ ब्राह्मणानां भोजनैर्वा शीघ्रं स्यान्मंत्रसाधनम् ॥ ५२ ॥ स्पर्शादिमोक्षपर्यंतं जप्त्वा हवनभोजनैः ॥ मंत्रसिध्धिर्भवेत्सद्यो तन्मयज्ञानतोपि वा ॥ ५३ ॥ श्रीपार्वत्युवाच—यंत्रोत्धारः कथं तस्य वद विस्तरतो विभो ॥ पूजाविधानमप्यस्य सम्यग्वद महेश्वर ॥ ५४ ॥ ईश्वर उवाच—यंत्रोद्धारं प्रवक्ष्यामि सावधानमना श्रृणु ॥ आदौ

वृत्तं समालिख्य चतुरस्रं ततःपरम् ॥ ५५ ॥ ततः पश्चा-
दष्टदळं विलिखेद्भूपुरं ततः ॥ वेदादिं विलिखेद्वृत्ते तद्बीजं प्रण-
वांतरे ॥ ५६ ॥ चतुर्दळेषु चत्वारि वेदादीनि समालिखेत् ॥
एह्यादीन्यष्टबीजानि दळेष्वष्टसु विन्यसेत् ॥ ५७ ॥ तत्संधौ
सर्वमंत्राणां समंतात्परिपूरयेत् ॥ अकारादिक्षकारांतैर्बीजवन्मा-
तृकाक्षरैः ॥ ५८ ॥ अनुलोम-विलोमाभ्यां वेष्टयेच्च दळाष्टकम् ॥
भूपुरं वेष्टयेद्बीजैर्भूबीजैर्दशभिः पृथक् ॥ ५९ ॥ वृत्तं तु प्रणवे-
नैव वेष्टयेच्च प्रयत्नतः ॥ चतुर्दळं वेष्टयेच्च बीजैः पाश-गजां-
कुशैः ॥ ६० ॥ एतद्यंत्रं मया प्रोक्तं रहस्यं सांप्रदायकम् ॥
एतद्यंत्रस्य महिमा वर्ण्यते शृणु पार्वति ॥ ६१ ॥ श्रीपार्व-
त्युवाच—वर्ण्यतां महिमा पश्चात्पूर्वं बीजाक्षरं वद ॥ द्वादशाक्षर-

मंत्रस्य न्यास-ध्यानं च किं वद ॥ ६२ ॥ शंकर उवाच--बीजोद्धारं प्रवक्ष्यामि दत्तात्रेयस्य योगिनः ॥ दक्षिणामूर्तिबीजं च रामबीजेन संयुतम् ॥ ६३ ॥ मिळित्वैकाक्षरं ज्ञेयं बिंदु-नाद-कलान्वितं ॥ एतद्बीजं मया प्रोक्तं ब्रह्मा-विष्णु-शिवात्मकम् ॥६४॥ वेदव्यासेन कथितं प्रकारांतरमुच्यते ॥ दत्तस्यादिर्महाग्राह्याः आत्रेयस्यादिमः स्मृतः ॥ ६५ ॥ तत्रस्थ रेफसंयुक्तं कळा निधिसमन्वितम्॥दत्त्रात्रेयाक्षरं प्रोक्तं साक्षाद्विष्णवात्मकं महत् ॥ ॥ ६६ ॥ बीजोद्धारो मया प्रोक्तो नदेयो यस्यकस्याचित् ॥ द्वादशाक्षरमंत्रस्य न्यासं वक्ष्यामि तच्छृणु ॥ ६७ ॥ द्वाभ्यां द्वाभ्यां पुनर्द्वाभ्यां चतुर्भिश्च ततःपरम् ॥ पुनर्द्वाभ्यां प्रकुर्वीत पंचांगन्यास ईरितः ॥ ६८ ॥ उपयुक्तेन बीजेन षडंगान्यथवा

क्रियाः ॥ एवं न्यासविधिं कृत्वा ततो ध्यानं समाचरेत् ॥६९॥ श्लोकम् ॥ व्याख्यामुद्रां करसरसिजे दक्षिणे संदधानो जानून्यस्तापरकरसरो जातवामोन्नतांगः ॥ न्यासध्यानात्सुखपरवशादर्धमामीलिताक्षो दत्तात्रेयो भसितधवळः पातु नः कृत्तिवासाः॥ ॥ १ ॥ एवं ध्यात्वा समाधाय चित्तचिंतितदायिनम् ॥ सप्तावरणसंयुक्तं दत्तात्रेयं प्रपूजयेत् ॥ ७० ॥ तत्रावरणमाद्यं स्यादंगैः षड्भिर्यथाक्रमात् ॥ वन्हीशरक्षो-वाय्वादीन् पृष्ठेष्वंगानि पुजयेत् ॥७१॥ ऋग्यजुःसामाथर्वैश्च इतिहास-पुराणकैः॥ मीमांसया च न्यायेन द्वितीयावरणं यजेत् ॥ ७२ ॥ सरस्वती गणपतिः शुकश्चापि सुमंतुना ॥ जैमिन्याख्येन मुनिना वैशंपायनमौनिना ॥ ७३ ॥ पैलेन गोभिलेनापि तृतीयावरणं

यजेत् ॥ कश्यपोत्रिर्भरद्वाजः विश्वामित्रश्च गौतमैः ॥ ७४ ॥ जमदग्निवासिष्ठाभ्यां व्यासेन च चतुर्थकम् ॥ अणिमा महिमा चैव गरिमा लघिमा तथा ॥ ७५ ॥ प्राप्तिः प्राकाम्यमीशित्वं विशित्वं पंचमे यजेत् ॥ मत्स्येंद्रकं दळेंद्रं च गोरक्षं गोगणेश्वरम् ॥ ७६ ॥ नागार्जुनं मेवनादं भुजंगं कुरुनायकम् ॥ यजेदरुणवीर्याख्यान् नंदनाथपुरःसरान् ॥ ७७ ॥ षष्ठ्यावरणे सिद्धान्नवनाथान्सभैरवान् ॥ इंद्राग्नि-यम-नैर्ऋत्य-वरुणानिल-यक्षपान् ॥ ७८ ॥ ईशानं च यजेद्दिक्षु सप्तमावरणे सुधीः ॥ सप्तावरणसंयुक्तं दत्तात्रेयं मुनीश्वरम् ॥ ७९ ॥ सकृध्यायन्नर्चयन्वा योगी भवति मंत्रवित् ॥ ध्यानभेदात्फलं भिन्नं ध्यानभेदान्वदामि ते ॥ ८० ॥ जपापुष्पारुणाकारो जटापल्लवशो-

भितः ॥ तांबुलांचन्मुखीसाक्षाद्ब्रह्मास्त्रो वश्यकृद्युवा ॥८१॥ शूलं दोर्भ्यां समादाय भित्वा दिक्षु विनिक्षिपेत् ॥ नानावर्णश्च भृकुटीः क्रूरास्यो द्वेषकारकः ॥ वाय्वस्थः कृष्णरूपस्थः तमेवं चालयन्यजेत् ॥ ८२ ॥ ज्याघातैः पादघातैश्च शत्रोरुच्चाटकारकः ॥ तिष्ठन् जानुयुगेनैव नम्रपाणियुगे समे ॥ ८३ ॥ कंठे बध्वा रिपून् हंता ध्येयः कर्मणि मारणे ॥ सपाशांकुशमध्यस्थो रक्तनानाविभूषणम् ॥ ८४ ॥ साध्यं नयंतं भिन्नाग्रे छायेवाकृष्टकर्मणि ॥ पीतं पीतांकुशं पीतपुष्पं पीतविभूषणम् ॥ ८५ ॥ पीतालेपं द्विषड्जिव्हाधरं स्तंभकरं स्मरेत् ॥ श्रीपार्वत्युवाच— पूर्वं त्वया यंत्रराजं तद्यंत्राधिक्यकीर्तनम् ॥ ८६ ॥ तत्सर्वं सम्यगाचक्ष्व सर्वे जीवंतु जंतवः ॥ शिव उवाच—एतद्यंत्रस्य

माहात्म्यं नाहं शक्नोमि वर्णितुम् ॥ ८७ ॥ तथापि किंचिद्व
क्ष्यामि यथा ज्ञातं यथा श्रुतम् ॥ वेदव्यासेन कथितं तत्सर्वं
कथयामि ते ॥ ८८ ॥ भुर्जे वा ताडपत्रे वा पाषाणे वा वटेऽपि
वा ॥ रजते वा सुवर्णे वा नागे वा वंगकेऽपि वा ॥ ८९ ॥
महीतले वा भित्तौ वा यंत्रं सांगं समालिखेत् ॥ अष्टगंधैरष्टापि-
ष्टैरष्टद्रव्यैः सितेतरैः ॥ ९० ॥ रक्तश्वेतैश्चित्रवर्णैस्तत्र पत्रस्व-
रूपतः ॥ सांप्रदायं गुरुमुखात्सम्यग्ज्ञात्वा समालिखेत् ॥९१॥
नयुक्तितो नैव मत्या कुर्यात्कृत्वाऽशुभं व्रजेत् ॥ गुरुहीनं च
यत्किंचिन्नकर्तव्यं कदाचन ॥ ९२ ॥ कलशे निक्षिपेद्यंत्रं क्षीर-
मध्येऽथवा जले ॥ तज्जलात्सेचनात्क्षीरपानादस्य फलं शृणु ॥
॥ ९३ ॥ गुदरोगान्नाभिरोगानाक्षिरोगांश्च त्वद्गतान् ॥ कंठरो-

गान् दंतरोगान् श्रोत्ररोगान् दृगाश्रितान् ॥ ९४ ॥ नासा-
रोगान् कर्णरोगान् शिरोरोगान् त्वचाश्रितान् ॥ त्वग्रोगो रक्त-
रोगो वा मांसरोगास्थिरोगकाः ॥ ९५ ॥ मज्जारोगाश्च मेदो
वा शुक्ररोगाविदुर्भवाः ॥ नश्यंति सकलान् रोगान् सत्यमेत-
द्वदामि ते ॥९६॥ भूचराः खेचराश्चापि यक्ष-रक्ष-पिशाचकाः ॥
ब्रह्मराक्षस-वेताळाः कूष्मांडा भैरवादयः ॥ ९७ ॥ उक्तानुक्ताश्च
सर्वे वै अथर्वणसमुद्भवाः ॥ यंत्रधारणमात्रेण सर्वे नश्यंत्यसंश-
यम् ॥ ९८ ॥ हस्त्यश्वरथपादातं यंत्रयुग्मं च दर्शनात् ॥
पलायंते क्षणेनैव या वंध्या पुत्रवद्भवेत् ॥ ९९ ॥ सर्वशांतिकरं
पुण्यं सर्वपापप्रणाशनम् ॥ सर्वकामप्रदं चापि सर्वोपद्रवनाश-
नम् ॥१००॥ राजानो दासतां यांति शत्रवो मित्रतां गताः ॥

वन्हयः शीततां यांति दत्तात्रेयः प्रसीदति ॥ १०१ ॥ वृत्त-षट्कोणाष्टपत्रचतुष्टाशाश्रिसुस्वरैः ॥ प्राणं दद्यात्धनं द्द्यान्मानं दद्यादथापि वा ॥ १०२ ॥ पुत्रान् दद्यात्पशून्दद्यान्नदद्यात् षोडशाक्षरम् ॥ अवाच्यमपि वक्ष्यामि त्वमर्धांगं ममापि यत् ॥ ॥ १०३ ॥ दरिद्रायातिशांताय नित्यधर्मपराय च ॥ प्राण-हिंसाविहीनाय सर्वजीवदयाळवे ॥ १०४ ॥ राग-द्वेषविहीनाय परस्त्रीविमुखात्मने ॥ मंत्रे गुरौ देवतायां विश्वासाधरशालिने॥ ॥ १०५ ॥ षोडशाक्षरमंत्रोयं देयोन्यस्मै कदाचन ॥ तारमादिं समुच्चार्य ततोवाग्भवमुच्चरेत् ॥ १०६ ॥ कामबीजं त्रिधा कुर्या-ज्जातित्रितयसंयुतम् ॥ भुवने श्रीं तथा कुर्यात्तत्तु जातित्रया-न्वितम् ॥ १०७ ॥ चंद्रबीजं विसर्गांतं नवमं परिकीर्तितम् ॥

ॐ दत्तात्रेयसंभवे ॥ तारवाग्भवबीजाभ्यां द्वाभ्यां त्हृदयमाचरेत् ॥१०८॥ कामबीजैस्त्रिभिः शिर्षं हृल्लेखाभिस्त्रिभिः शिखाम् ॥ चंद्रबीजेन कवचं अस्त्रं दत्तादिसप्तभिः ॥ १०९ ॥ एवं पंचांगकं न्यासं कृत्वा ध्यानं समाचरेत् ॥ अथ ध्यानं प्रवक्ष्यामि सर्वकामफलप्रदम् ॥ ११० ॥ येन विज्ञानमात्रेण सिद्धिः स्यात्सर्वसंपदः ॥ ध्यानं—मंदारमूले मणिपीठसंस्थं सुवर्णदानैकनिबद्धदीक्षम् ॥ ध्यायेत्परीतैः नवनाथसिध्दैः दारिद्र्यदावानलदेवमेघैः ॥१११॥ एवं ध्यात्वा जपेन्मंत्रं मंत्राक्षरसहस्रकं ॥ ११२ ॥ तद्दशांशो भवेत्धोमः तद्दशांशं तु तर्पणम् ॥ तद्दशांशं भोजनं च मंत्रसिद्धिः प्रजायते ॥ ११३ ॥ सिद्धिसिद्धिर्भवेत्तस्य नरसिद्धिः प्रजायते ॥ ये चरंति च सर्वत्र चिरजीवी भवन्ति च ॥

एवं सावरणं ध्यायेत्सर्वं सिध्यति तत्क्षणात् ॥ १२७ ॥ उच्चरे-न्मनसा मंत्रं सर्वदा सर्वकामदम् ॥ नारायणो जगत्कर्ता वेत्ति माहात्म्यमस्य वै ॥ १२८ ॥ बहुना किं प्रलापेन नास्ति तत्स-दृशो मनुः ॥ सर्वं होमादिकं कार्यं द्वादशाक्षरमंत्रवत् ॥ १२९ ॥ यंत्रमस्य प्रवक्ष्यामि त्रिकोणं पूर्वमालिखेत् ॥ षट्कोणं विलिखे-त्पश्चात्त्रिकोणे प्रणवं लिखेत् ॥ १३० ॥ षट्कोणे मंत्रमखिलं तत्संधिष्वंगमंत्रकान् ॥ एतद्यंत्रस्य माहात्म्यं वेत्ति हैहयनायकः ॥१३१॥ एतन्मंत्रेण यंत्रेण कार्तवीर्यो महानभूत् ॥ एतद्यंत्रं वि-निक्षिप्तं जलस्य स्नान-पानतः ॥ १३२ ॥ प्रोक्षणादेव नश्यंति गदाश्शिथिलकादयः ॥ ईतिबाधा विनश्यंति यंत्रं यत्रस्थितं ततः ॥ १३३ ॥ यं यं कामयते सम्यक् तं तमाप्नोत्यसंशयः ॥

दत्त-
॥१५॥

श्रीबीजं तदनंतरम् ॥ १२१ ॥ मायाबीजं ततःपश्चात्कामबीजं ततःपरम् ॥ भूबीजं तु ततःपश्चाद्दत्तबीजं ततःपरम् ॥ १२२ ॥ अयं षडक्षरो मंत्रो रहस्यस्तव ईरितः ॥ षड्बीजैश्च षडंगानि शेषं पूर्ववदाचरेत् ॥ १२३ ॥ लक्षमात्रं पुनश्चर्यात्ततः कार्याणि साधयेत् ॥ श्लो०–उत्तानके करतलेप्यपसव्यसव्ये सोपानपर्वसदृशे उपरि स्वनाभेः ॥ आस्थाय चर्मवसनं भसितांगरागं मंत्रेण सेतुभुजरक्तजटाकलापम् ॥ १ ॥ एवं ध्यानं मया प्रोक्तं सर्वसंपत्प्रदायकम् ॥ १२४ ॥ अस्यावरणभेदोस्ति वक्ष्येऽहं शृणु पार्वति ॥ लक्ष्मीनारायणौ प्राच्यां दक्षिणे पार्वतीश्वरौ ॥१२५॥ पश्चिमे रतिकंदर्पौ भूवराहौ तदुत्तरे ॥ एवमावरणोपेतं चक्रवर्तित्वदायकम् ॥१२६॥ अष्टादशादिद्वीपानामाधिपत्यप्रदायकम् ॥

कल्प.
॥१५॥

एवं सावरणं ध्यायेत्सर्वं सिध्यति तत्क्षणात् ॥ १२७ ॥ उच्चरे-
न्मनसा मंत्रं सर्वदा सर्वकामदम् ॥ नारायणो जगत्कर्ता वेत्ति
माहात्म्यमस्य वै ॥ १२८ ॥ बहुना किं प्रलापेन नास्ति तत्स-
दृशो मनुः ॥ सर्वं होमादिकं कार्यं द्वादशाक्षरमंत्रवत् ॥ १२९ ॥
यंत्रमस्य प्रवक्ष्यामि त्रिकोणं पूर्वमालिखेत् ॥ षट्कोणं विलिखे-
त्पश्चात्रिकोणे प्रणवं लिखेत् ॥ १३० ॥ षट्कोणे मंत्रमखिलं
तत्संधिष्वंगमंत्रकान् ॥ एतद्यंत्रस्य माहात्म्यं वेत्ति हैहयनायकः
॥१३१॥ एतन्मंत्रेण यंत्रेण कार्तवीर्यो महानभूत् ॥ एतद्यंत्रं वि-
निक्षिप्तं जलस्य स्नान-पानतः ॥ १३२ ॥ प्रोक्षणादेव नश्यंति
गदाश्शिथिलकादयः ॥ ईतिबाधा विनश्यंति यंत्रं यत्रस्थितं
ततः ॥ १३३ ॥ यं यं कामयते सम्यक् तं तमाप्नोत्यसंशयः ॥

एकाक्षरमनुं वक्ष्ये बीजमेकाक्षरो मनुः ॥ १३४ ॥ षडंगान्यत्र योज्यानि बीजादक्षरयोगतः ॥ ध्यानं–ध्यानं वक्ष्ये शैलपुत्री सर्वदा सर्वकामदम् ॥१३५॥ योगारूढं योगपद्मं निवीतं हस्तद्वंद्वं जानुयुग्मं प्रसार्य ॥ अंसाग्रस्तद्रक्तचंचज्जटाकं दत्तात्रेयं भावयेद्वीक्षमाणम् ॥ १ ॥ एवं ध्यात्वा सदा देवि गच्छन् तिष्ठन् भजन् जपन् ॥ जिघ्रन् पश्यन् स्वपन् शृण्वन् वदन् ध्यायन् समर्पयन् ॥ १३६ ॥ एवं ध्यानजुषां नृणां दत्तात्रेयोनुधावति ॥ षडक्षरस्य यद्यंत्रं एकाक्षरमनोश्च तत् ॥ १३७ ॥ द्वादशाक्षरवत्सर्वं कुर्यान्मंत्रं समाहितः ॥ अष्टाक्षरमनुं वक्ष्ये तद्बीजं क्रों ततः परम् ॥ १३८ ॥ नमश्शब्दसमायुक्तं विदुरष्टाक्षरो मनुः ॥ न्यास-ध्यानादिकं सर्वं एकाक्षरमनोरिव ॥ १३९ ॥ एकाक्षरम-

नोरेव यंत्रमष्टदळादिकम् ॥ जपमष्टसहस्राणि पुरश्चरणसिद्धये ॥ १४० ॥ विश्वदर्पणमनुं वक्ष्ये षोडशाक्षरमंत्रतः ॥ नमः प्राक् श्रीविष्णवेति विंशद्वर्णात्मको मनुः ॥ १४१ ॥ षोडशाक्षरवत्सर्वं जप-होमार्चनादिकम् ॥ षोडशाक्षरयंत्रं यद्विश्वदर्पणमनोरपि १४२ अधिकं किंचिदस्त्यस्य पश्चाद्द्वादशपत्रकम् ॥ अष्टाश्रपत्रं नास्त्यत्र किंतु द्वादशपत्रकम् ॥ १४३ ॥ अनुष्टुभमनुं वक्ष्ये सर्व-मंत्रोत्तमोत्तमम् ॥ दत्तात्रेयपदं पूर्वं ततो हरिपदं वदेत् ॥ १४४ ॥ ततः कृष्णपदं वाच्यं उन्मत्ताख्यमतःपरम् ॥ आनंददायकं चैव दिगंबरपदं ततः ॥ १४५ ॥ ततो मुनिपदं वाच्यं ततो बालपदं वदेत् ॥ पिशाचपदमुच्चार्य ज्ञानसागर इत्यतः ॥ १४६ ॥ सर्वाणि संबुध्यन्तानि पदान्येतानि कीर्तयेत ॥ अयमानुष्टुभो मंत्रो

दत्तात्रेय हरे कृष्ण उन्मत्तानंददायक ।
दिगंबर मुने बाल पिशाच ज्ञानसागर ॥

सर्वमंत्रपुरातनः ॥१४७॥ सर्वमंत्रप्राणदायी सर्वमंत्रैकसाधनः ॥ सकृत्स्मरणमात्रेण सर्वकार्यप्रसिद्धितः ॥ १४८ ॥ पार्वत्युवाच-छंदोऽऋषिं देवतां च न्यासं ध्यानं क्रमाद्वद ॥ छंदांसि पूर्वमंत्राणां सम्यग्वद महेश्वर॥ १४९॥ईश्वर उवाच-सर्वेषांपूर्वमंत्राणां गायत्री-छंद ईरितं॥ऋषिःसर्वत्र शबरो महारुद्रः प्रकीर्तितः ॥ १५० ॥ अस्यानुष्टुभमंत्रस्य न्यासं वक्ष्ये शृणु प्रिये ॥ पादाभ्यां प्रणवा-दिभ्यां द्वाभ्यां द्वाभ्यां क्रमान्यसेत् ॥ १५१ ॥ वन्हिजाया समे-ताभ्यां पंचांगन्यासमारभेत् ॥ ध्यानं वक्ष्यामि देवेशि नाना-भीष्टप्रदायकम् ॥ १५२ ॥ ध्यानमात्रेण सिध्यंति चिंतिताभीष्ट-संपदः ॥ ध्यानं—काशी कोल्ला माहुरी सह्यकेषु स्नात्वा जप्त्वा प्राश्य शेतेऽन्वहं यः ॥ दत्तात्रेयः तत्क्षणात्सर्व-

गामी त्यागी भोगी दिव्ययोगी दयालुः ॥ १ ॥ ध्यानमुक्तं-
मया देवि यंत्रमस्य प्रवक्ष्यते ॥ १५३ ॥ त्रिकोणमथ
षट्कोणमष्टपत्रमतःपरम् ॥ द्वादशारं षोडशारं विंशत्यारमतः-
परम् ॥ १५४ ॥ द्वात्रिंशद्दळपत्रं च ततस्त्रिवलयं लिखेत् ॥
भूपुरं द्वितयं पश्चादष्टवज्रविभूषितम् ॥ १५५ ॥ त्रिकोणे
विलिखेद्बीजम् प्रणवेनैव वेष्टयेत् ॥ षडक्षरं तु षट्कोणे माया-
बीजेन वेष्टयेत् ॥ १५६ ॥ लिखेदष्टदळे पद्मे अष्टाक्षरमनुत्तमम् ॥
वेष्टयेत्कामबीजेन पद्ममष्टदळं सुधीः ॥ १५७ ॥ द्वादशारे द्वाद-
शार्णम् रमाबीजेन वेष्टयेत् ॥ षोडशारे तु विलिखेत् षोडशा-
क्षरकं मनुं ॥ १५८ ॥ कळाभिर्वेष्टयेत्सम्यक् षोडशारं सरोरुहम् ॥
विंशत्यारे तु विलिखेद्विंशद्वर्णात्मकं मनुम् ॥ १५९ ॥ वेष्टयेद्र-

सबीजेन विंशत्यारं सरोरुहम् ॥ द्वात्रिंशद्दळपद्मे तु लिखेदानु-
ष्टुभं मनुम् ॥ १६० ॥ हलभिर्वेष्टयेत्पद्मं त्रिंशद्दळसमन्वितम् ॥
मालामंत्रं ततो लिख्यादंतरे लेखयोर्द्वयोः ॥ १६१ ॥ तत्सर्वं
वेष्टयेत्पश्चात्पाशांकुशयुगेन वै ॥ भूपुरे विलिखेत्पश्चाच्चतुर्धाष्टा-
क्षरान् दश ॥ १६२ ॥ दिक्पालबीजान् विलिखेत्प्राणस्थापन-
माचरेत् ॥ जपं कुर्याद्धि हवनं कुर्याद्ब्राह्मणभोजनम् ॥ १६३ ॥
गंधानुलेप-वसन-भूष-तांबूल-दक्षिणैः ॥ एवं कृत्वाऽभ्यर्च्य यंत्रं दत्ता-
त्रेयस्य योगिनः ॥१६४॥ वंदारुजनमंदारं वांछितार्थफलार्णवम् ॥
भवारण्यमहादावनिर्वापणबलाहकम् ॥ १६५ ॥ महाघहरणं
पुंसां महाव्याधिनिवारणम् ॥ महाग्रहोच्चाटनं च महाश्रेयस्करं
परम् ॥ १६६ ॥ मैलाभरेणुकाकाक-घूक-वारणबाहुभिः ॥ शिथिले की-

टमधुभिः वल्मीकैः संवतो गतः ॥ १६७ ॥ देशागतैःशुभप्राप्तैः कालप्राप्तैरघागतैः ॥ दुर्निमित्तैः दुष्टगतैः यैरघाभिर्विनश्यति ॥१६८॥ कीर्तनाच्छ्रवणाध्ध्यानाल्लेखनाद्धारणक्षणात् ॥ यं यं कामयते कामं तं तमाप्नोत्यसंशयः ॥ १६९ ॥ भुजमूले शिरोदेशे कंठे वा श्रवणेऽपि वा ॥ पट्टणे वा ग्रहे सौधे ग्रामे वाऽरामतोपि वा ॥ ॥ १७० ॥ कूपे वाप्यथ गोष्ठे वा क्षितौ वा धान्यराशिषु ॥ ध्वजाग्रे वा गजाश्वे वा आज्यभांडे मुखेऽपि वा ॥ १७१ ॥ पुत्तळे मस्तके वाऽपि दत्तयंत्रं विधीयते ॥ तत्तत्सम्यग्भवेत्कार्यं तत्तदापन्निवारणम् ॥ १७२ ॥ एवं यंत्रं मया प्रोक्तं मालामंत्रेष्वयं क्रमः ॥ यंत्रोद्धारस्य कर्तव्यो मालामंत्रमिहोच्यते ॥१७३॥ मालामंत्रमहं वच्मि सकृदुच्चारणार्थदम् ॥ एकवारोच्चारणेन

मंत्रेणाखिलसिद्धयः ॥ १७४ ॥ नपुनरुच्चारणक्लेशो नात्यंतानि-यमोऽथवा ॥ अतिध्यानप्रयासो वा ह्यत्यंतहवनक्षतिः ॥ प्रत्यहं दशधोच्चारो दत्तात्रेयायते भुवि ॥ १७५ ॥ ॥ इति श्रीदत्तकल्पः समाप्तः ॥ ॥ ॥ ॥ ॥



---

## अथ दत्तमाला प्रारभ्यते.

श्रीगणेशाय नमः ॥ पार्वत्युवाच—मालामंत्रं मम ब्रूहि प्रिया यस्मादहं तव ॥ ईश्वर उवाच–शृणु देवि प्रवक्ष्यामि मालामंत्र-मनुत्तमम् ॥ ॐनमो भगवते दत्तात्रेयाय, स्मरणमात्रसंतुष्टाय, महाभयनिवारणाय, महाज्ञानप्रदाय, चिदानंदात्मने, बालोन्मत्त-पिशाचवेषाय, महायोगिने, अवधूताय, अनघाय, आनंदवर्धनाय,

अत्रिपुत्राय, सर्वकामप्रदाय, ॐ भवबंधमोचनाय, आं साध्य-
बंधनाय, ऱ्हीं सर्वभूतिदाय, क्रौं साध्याकर्षणाय, ऐं वाक्प्रदाय,
क्लीं जगत्त्रयवशीकरणाय, सौं सर्वमनोक्षोभणाय, श्रीं महासंप-
त्प्रदाय, ग्लौं भूमंडलाधिपत्यप्रदाय, द्रां चिरंजीविने, वषट्
वशीकुरु कुरु, वौषडाकर्षयाकर्षय, हुं विद्वेषय विद्वेषय, फट्
उच्चाटयोच्चाटय, ठठ स्तंभय स्तंभय, खें खें मारय मारय, नमः
संपन्नय संपन्नय, स्वाहा पोषय पोषय, परमंत्र-परयंत्र-परतंत्रा-
णि छिंधि छिंधि, ग्रहान्निवारय निवारय, व्याधीन् विनाशय
विनाशय, दुःखं हर हर, दारिद्र्यं विद्रावय विद्रावय, देहं पोषय
पोषय, चित्तं तोषय तोषय, सर्वमंत्रस्वरूपाय, सर्वयंत्रस्वरूपाय,
सर्वतंत्रस्वरूपाय, सर्वपल्लवस्वरूपाय, ॐनमो महासिद्धिदाय

स्वाहा ॥ चतुःशतजपात्सिद्धिः ॥ ॥ इति श्रीवड्डोमरेश्वरविरचिता दत्तमाला समाप्ता ॥ ॥ ॥ ॥ ॥

## अथ दत्तकवचः प्रारभ्यते.

श्रीगणेशाय नमः ॥ अस्य श्रीदत्तात्रेयकवचस्तोत्रमहामंत्रस्य, आंगिरसो भगवान् ऋषिः, अनुष्टुप् च्छंदः, श्रीदत्तात्रेयः परमात्मा देवता, ऐं बीजं, क्लीं शक्तिः, स्वाहा कीलकम्, मम श्रीदत्तात्रेयप्रसादसिध्यर्थे जपे विनियोगः ॥ ॥ अथध्यानम्—ध्यायेत्संयमिसेवितांघ्रिकमलं तत्तत्प्रकाशोज्वलं मायागूढविहारिणं (भुवि) यदि सदा माहिष्मतीपावनम् ॥ रेवातीरविहारिणं यतिवरं भक्तार्तिनिर्वाहकम् ॥ योगारूढमतिं प्रसन्नवदनं योगीश्वरी-

शं भजे ॥१॥ पूर्वस्यां दिशि योगीशः आग्नेय्यां दिशि माधवः ॥
दक्षिणे पातु सर्वात्मा नैऋत्यां भक्तवत्सलः ॥ २ ॥ प्रतीच्यां
पातु ब्रह्मण्यो वायव्यां च दिगंबरः ॥ उदीच्यां सुव्रतः पातु
ईशान्ये पातु भद्रदः ॥ ३ ॥ अधस्ताद्विष्णुभक्तस्तु सर्वतः
पातु सर्वगः ॥ दत्तात्रेयः शिरः पातु ललाटं मौनिशेखरः ॥४॥
भ्रूमध्यं पातु सर्वज्ञो नेत्रे पातु दयानिधिः ॥ नासां पातु महा-
योगी श्रुतिं पातु श्रुतिप्रियः ॥ ५ ॥ स्कंधौ मनोजवः पातु
पार्श्वे च पुरुषोत्तमः ॥ करयुग्मं च मे पातु कार्तवीर्यवरप्रदः॥६॥
नखान्पात्वघसंहारी कक्ष्यौ पातु भयापहः ॥ नारायणात्मकः
पातु वक्षसी स्तनयोस्तथा ॥ ७ ॥ पृष्ठतः सर्वदा पातु सर्वलोक
नियामकः ॥ उदरं चाच्युतः पातु नाभिं पातु महात्मकः ॥८॥

अत्रिपुत्रः कटिं पातु सक्थिनी पातु शाश्वतः ॥ गुह्यं च मे सदा पातु नग्नवेषधरः परः ॥ ९ ॥ ऊरू पातु त्रिकालज्ञो जानुनी पातु शंकरः ॥ जंघे मायाजितः पातु पातु गुल्फौ स्वयं प्रभुः ॥ ॥ १० ॥ पादौ पातु सदाभोगी सदायोगी करांगुलिः ॥ त्रिकालज्ञोऽखिलवपुः पातु रोमाणि सर्वगः ॥ ११ ॥ ॐनमो भगवते दत्तात्रेयाय, सर्वलोकैकसन्नुताय, सर्वनियामकाय, सर्वतंत्राय, सर्वकामफलप्रदाय, सर्वविद्यापारंगताय, सर्वयोगींद्र-मुनींद्रसेविताय, सर्वभक्तलोकरक्षणाय, सदा ब्रह्मचर्यव्रतधराय, मायागूढविहाराय, जडोन्मत्त-मूक-बधिरस्वरूपाय, नग्नवेषसंचाराय ॥ ॐनमो भगवते दत्तात्रेयाय, मुनिपतये, सर्वदेवाभयप्रदाय, सर्वराक्षसविनाशकारणाय, सर्वोपद्रवनिवारणाय, सर्वमंत्र-यंत्र-तंत्रनिवारणाय, सर्व

ग्रहोच्चाटनाय, सर्वरोगविनाशनाय ॐ ऱ्हीं क्रों क्षौं क्रूं ऱ्हीं ऱ्हूं श्रीं ॥ ॐनमो भगवते कार्तवीर्यसमुद्धरणाय, रेवानदीजलक्रीडापरायणाय, माहीष्मतीपुरनिवासाय, अनसूयागर्भसंभूताय, अत्रिनेत्रानंदकराय,क्षणमात्रलोकसंचरणाय, शम-दम-यम-नियमसंपन्नाय, ब्रह्मराक्षस-भूत-वेताळ-पैशाचिक-शाकिनी-डाकिनी-पूतनादिग्रह निवारणाय, आश्रितार्तिनिवारणाय, संस्मरणमात्रसंन्निहिताय, श्रीदत्तात्रेयाय, योगीश्वराय, सर्वकार्याणि मे साधय साधय, सर्वदा रक्ष रक्ष, हुंफट् स्वाहा ॥ दत्तात्रेयस्य कवचं य इदं शृणुयान्नरः ॥ लिखेद्वा धारयेद्यस्तु पठेद्वा नियतः पुमान् ॥ १ ॥ सर्वान्कामानवाप्नोति सर्वत्र विजयी भवेत् ॥ राजद्वारे महाघोरे संग्रामे देशविप्लवे ॥२॥ नदीसंक्रमणे चैव तथा चोराग्निसंकटे॥

गज-सिंह-व्याघ्र-शालावृक-भीममहोरगैः ॥ ३ ॥ अरण्ये दस्यु-
संकीर्णे पर्वते दुर्गमे तथा ॥ ब्रह्मराक्षस-गंधर्व-भूत-यक्ष-ग्रहा-
दिकैः ॥ ४ ॥ शाकिनी डाकिनी या तु प्रेतेभ्यो नभयं भवेत् ॥
अपुत्रो लभते पुत्रान् निर्धनो धनवान् भवेत् ॥ ५ ॥ विद्यार्थी
चाप्नुयाद्विद्यां मोक्षार्थी मोक्षमाप्नुयात् ॥ रोगी च मुच्यते
रोगाद्बद्धो मुच्येत बंधनात् ॥ ६ ॥ अपस्मार-क्षय-व्याधि-स्फो-
टिकान्विकलास्तथा ॥ एकाहिकम् द्व्याहिकं च त्र्याहिकं च
चतुर्थकम् ॥ ७ ॥ पाक्षिकं मासिकं चैव ज्वरमस्तिगतं तथा ॥
शीतोष्णतापज्वरो वा दूरादेव विनश्यति ॥ ८ ॥ सद्यः सार-
स्वतप्राप्तिं विवादे विजयप्रदम् ॥ सर्वग्रहानुग्रहभाक् सर्वसंप-
त्प्रदायकम् ॥ ९ ॥ दत्तात्रेयप्रसादेन सर्वान्कामानवाप्नुयात् ॥

॥१०॥ ॥ इति श्रीब्रह्मवैवर्तपुराणे श्रीदत्तकवचं संपूर्णम् ॥

---

## अथ श्रीदत्तहृदय प्रारंभः

श्रीगणेशाय नमः ॥ श्रीपार्वत्युवाच—देव शंकर सर्वेश भक्तानामभयप्रद ॥ विज्ञाप्तिं शृणु मे शंभो नराणां हितकारणम् ॥ १ ॥ ईश्वर उवाच–वद प्रिये महाभागे भक्तानुग्रहकारिणि ॥ २ ॥ पार्वत्युवाच—देवदेवस्य दत्तस्य हृदयं ब्रूहि मे प्रभो ॥ सर्वारिष्टहरं पुण्यं जनानां मुक्तिमार्गदम् ॥ ३ ॥ ईश्वर उवाच—शृणु देवि महाभागे हृदयं परमाद्भुतम् ॥ ४ ॥ अस्य श्रीदत्तात्रेयहृदयस्तोत्रमंत्रस्य श्रीभगवान् ईश्वरो ऋषिः, अनुष्टुप् छंदः, श्रीचित्स्वरूपी दत्तात्रेयो देवता, ॐबीजं, ह्रींशक्तिः,

क्रौंकीलकम्, ममाभीष्टसिध्यर्थे जपे विनियोगः ॥ द्रामिति दीर्घषडंगन्यासः ॥ ध्यानम् ॥ बालचंद्रसुशुभे च किरीटे पुष्पहारमणियुक्तवक्षकम् ॥ पीतवस्त्रपरिशोभितमध्यं प्रणमाम्यनुसुयोद्भवदत्तम् ॥ १ ॥ दत्तं सनातनं नित्यं निर्विकल्पम् निरामयम् ॥ हरिं शिवं महादेवं सर्वभूतोपकारकम् ॥ २ ॥ नारायणं महाविष्णुं सर्ग-स्थित्यंतकारिणम् ॥ निराकारं च सर्वेशं कार्तवीर्यं वरप्रदं ॥ ३ ॥ अत्रिपुत्रं महातेजं मुनिवंद्यं जनार्दनं ॥ द्रांबीजं वरदं शुद्धं ऱ्हींबीजेन समन्वितम् ॥ ४ ॥ शरण्यं शाश्वतं युक्तं मायया च गुणान्वितम् ॥ त्रिगुणं त्रिगुणातीतं त्रियामापतिमौलिकम् ॥ ५ ॥ रामं रमापतिं कृष्णं गोविंदं पीतवाससम् ॥ दिगंबरं नागहारं व्याघ्रचर्मोत्तरीयकम् ॥ ६ ॥ भस्मगंधादि-

लिप्तांगं मायामुक्तं जगत्पतिम् ॥ निर्गुणं च गुणोपेतं विश्वव्या-
पिनमीश्वरम् ॥७॥ ध्यात्वा देवं महात्मानं विश्ववंद्यं प्रभुं गुरुम्॥
किरीटकुंडलाभ्यां च युक्तं राजीवलोचनम् ॥ ८ ॥ चंद्रानुजं
चंद्रवक्त्रं रुद्रं इंद्रादिवंदितम् ॥ अनुसूयाकलत्रं च दिनेशममरा-
धिपम् ॥ ९ ॥ योगीश देवदेवेश अब्जजन्मादिवंदित ॥
नारायण विरूपाक्ष दत्तात्रेय नमोस्तु ते ॥ १० ॥ अनंत कम-
लाकांत औदुंबरस्थित प्रभो ॥ निरंजन महायोगिन् दत्तात्रेय
नमोस्तु ते ॥ ११ ॥ महाबाहो मुनिमणे सर्वविद्याविशारद ॥
स्थावरं जंगमानां च दत्तात्रेय नमोस्तु ते ॥ १२ ॥ ऐन्द्यां त्रातु
महावीर्यो वन्ह्यां प्रणवपूर्वकम् ॥ याम्यां दत्तात्रयो रक्षेन्नैर्ऋत्यां
भक्तवत्सलः ॥ १३ ॥ प्रतीच्यां पातु योगीशो योगिनां हृदये

स्थितः ॥ आनिल्यां वरदः शंभुः कौबेर्यां जगतः प्रभुः ॥ १४ ॥
एकाक्षरो महामंत्रः सर्वमंत्रेषु विश्रुतः ॥ अष्टाक्षरः सर्वसिद्धिः
सर्वतंत्रेषु गोपितः ॥ १५ ॥ ईशान्यां पातु मे रामो ऊर्ध्वं पातु
महामुनिः ॥ षडक्षरो महामंत्रः पात्वधस्ताज्जगत्पिता ॥१६॥
एवं पंक्तिदशो रक्षेद्यदुराजवरप्रदः ॥ अकारादिक्षकारांतं सदा
रक्षेद्विभुः स्वयम् ॥ १७ ॥ आदिनाथस्य दत्तस्य त्हृदयं सर्व-
कामदं ॥ दत्तं दत्त पुनर्दत्तं योवदेद्भक्तिसंयुतः ॥ १८ ॥ तस्य
पापानि सर्वाणि क्षयं यांति न संशयः ॥ य इदं पठते नित्यं
त्हृदयं सर्वकामदम् ॥ १९ ॥ पिशाच-शाकिनी-भूता-डाकिनी
शाकिनी तथा ॥ ब्रह्मराक्षस-वेताला झोटिंगा बालभूतकाः ॥
॥ २० ॥ गच्छंति पठनाद्देवि नात्र कार्या विचारणा ॥ अपवर्ग

प्रदं साक्षात् मनोरथप्रपूरकम् ॥ २१ ॥ एकवारं द्विवारं च त्रिवारं च पठेन्नरः ॥ जन्म-मृत्युं च दुःखं च सुखं प्राप्नोति भक्तिमान् ॥ २२ ॥ गोपनीयं प्रयत्नेन जननीजारवत्प्रिये ॥ नदेयं दुर्ह्रदे स्तोत्रं त्द्धदयाख्यं च भामिनि ॥ २३ ॥ गुरुभक्ताय दातव्यं अन्यथा नप्रकाशयेत् ॥ तव स्नेहाच्च कथितं भक्तिं ज्ञात्वा मया शुभे ॥ २४ ॥ दत्तात्रेयस्य कृपया सभवेद्दीर्घमायुकः ॥२५॥ ॥ इति श्रीरुद्रयामले शिवपार्वतीसंवादे दत्तत्द्धदयस्तोत्रं संपूर्णं ॥ ॥ ७ ॥ ॥ ॥

---

## अथ दत्तपंजरः प्रारभ्यते.

श्रीदत्तात्रेयाय नमः ॥ अथ पंजरः ॥ ह्रामित्यादिषडंगः ॥

लमिति जपं ॥ पूजा ॥ मूलमंत्रः ॥ ॐनमो भगवते दत्तात्रेयाय, महागंभीराय, वैकुंठवासाय, शंख-चक्र-गदा-त्रिशूलधारिणे, वेणुनादाय, दुष्टसंहारकाय, शिष्टपरिपालकाय, नारायणास्त्रधारिणे, चिद्रूपाय, प्रज्ञानंब्रह्ममहावाक्याय सकलकर्मनिर्मिताय, सच्चिदानंदाय, सकललोकसंचारणाय, सकलदेवतावशीकरणाय, सकललोकवशीकरणाय, सकलराजजनवशीकरणाय, सकलभोगवशीकरणाय, लक्ष्मीऐश्वर्यसंपत्कराय, मम मातृ-पितृ-सति-सहोदर-पुत्र-पौत्राभिवृद्धिकराय, गुडोदककलशपूजाय, अष्टदळपद्मपीठाय, बिंदुमध्ये लक्ष्मीनिवासाय ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ अष्टदळबंधनाय, ऱ्हीं ऱ्हीं ऱ्हीं ऱ्हीं चतुष्कोणबंधनाय, ऱ्हां ऱ्हां ऱ्हां ऱ्हां चतुर्द्वारबंधनाय, ऋग्यजुःसामाथर्वण-प्रणवसमेताय, उदात्ता-

नुदात्तस्वरितप्रचयाय, गायत्रि-सावित्रि-सरस्वातिदेवताय, अव-
घूताश्रमाय, अजपागायत्रीसमेताय, सकलसंपत्कराय, परमंत्र
परयंत्र-परतंत्रउच्चाटनाय, आत्ममंत्र-आत्मयंत्र-आत्मतंत्रसंरक्ष-
णाय, सदोचितसकलमतस्थापिताय, सद्गुरुदत्तात्रेयाय, हुंफट्
स्वाहा ॥ ॐ तत्सत् ॥

## दत्तात्रेयचक्रम्.

॥ इति श्रीदत्तपंजरः समाप्तः ॥ ८ ॥ ॥

# अथ दत्तषट्चक्रस्तोत्रं.

श्रीगणेशाय नमः ॥ मूलाधारे वारिजपत्रे सचतुष्के वं शं षं सं वर्णविशालैः सुविशालैः ॥ रक्तवर्णं श्रीगणनाथं भगवंतं दत्तात्रेयं श्रीगुरुमूर्तिं प्रणतोस्मि ॥ १ ॥ स्वाधिष्ठाने षड्दळपत्रे तनुलिंगे बालां तावद्वर्णविशालैः सुविशालैः ॥ पीतवर्णं वाक्पतिरूपं ग्रहणांतं दत्तात्रेयं श्रीगुरुमूर्तिं प्रणतोस्मि ॥ २ ॥ नाभीपत्रे पद्मदशांते उफ वर्णे लक्ष्मीकांतं गरुडारूढं नरवीरम् ॥ नीलं वर्णं निर्गुणरूपं निगमाख्यं दत्तात्रेयं श्रीगुरुमूर्तिं प्रणतोस्मि ॥ ३ ॥ हृत्पद्मांते द्वादशपत्रे कठवर्णे शंभुं शेषं हंसविशेषं समयं तम् ॥ सर्ग-स्थित्यंतान्कुर्वंतं शिवकांतिं दत्तात्रेयं श्रीगुरुमूर्तिं प्रणतोस्मि ॥ ४ ॥ चक्रस्थाने चक्रविशुद्धे कुसुमांते

चंद्राकारे षोडशपत्रे स्वरवर्णे ॥ मायाधीशं जीवशिवं तं निज-
मूर्तिं दत्तात्रेयं श्रीगुरुमूर्तिं प्रणतोऽस्मि ॥ ५ ॥ आज्ञाचक्रे
भृकुटिस्थाने द्विदळांते हंक्षं बीजं ज्ञाननिधिं तं गुरुमूर्तिं ॥
विद्युद्वर्णं ज्ञानमयं तं निटिलाक्षं दत्तात्रेयं श्रीगुरुमूर्तिं प्रण-
तोऽस्मि ॥ ६ ॥ शांताकारं शेषशयनंसुरवंद्यं कांतानाथं कोमल-
गात्रं कमलाक्षम् ॥ चिंतारत्नं चिद्घनरूपं द्विजराजं दत्तात्रेयं
श्रीगुरुमूर्तिं प्रणतोऽस्मि ॥ ७ ॥ ब्रह्मानंदं ब्रह्ममुकुंदं भगवंतं
सत्यं ज्ञानं सत्यमनंतं भगरूपम् ॥ पूर्णब्रह्मानंदमयं तं गुरुमूर्तिं
दत्तात्रेयं श्रीगुरुमूर्तिं प्रणतोऽस्मि ॥ ८ ॥ आधारे लिंगनाभौ
हृदयसरसिजे तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदळे
द्वादशार्धे चतुष्के ॥ वासांते बालमध्ये डफकठसहिते कंठदेशे

स्वराणां हंक्षं तत्वार्थयुक्तं सकलदळगतं वर्णरूपं नमामि ॥१॥
मूलाधारचतुर्दशारुणरुचिर्वांसांतवर्णात्मकं स्वाधिष्ठानमनेकावि-
द्रुमनिभं बालांतषट्पत्रकम् ॥ रत्नाभं मणिपूरकं दशदळं
डाद्यःफकारांतकम् पत्रैर्द्वादशभिः अनाहतपुरं हेमं कठारांत-
कम् ॥ मात्रा षोडशकैर्विशुद्धममलं ज्योतिर्मयं व्यापकम् हंक्षं
ह्यक्षरयुग्मपत्रसाहितं तस्माच्च आज्ञापुरम् ॥ २ ॥ तस्मादूर्ध्वम-
धोमुखं विकसितं पत्रं सहस्रारकम् नित्यानंदमयं सदाशिव-
मयं हंसं सदा भावये ॥ देहो देवालयः प्रोक्तो जीवो देवः
सनातनः ॥ त्यजेदज्ञाननिर्माल्यं सोहंभावेन पूजयेत् ॥ ३ ॥
॥ इति श्रीदत्तषट्चक्रस्तोत्रं संपूर्णम् ॥ ॥ ९ ॥ ॥

## अथ कामधेनुकल्पः प्रारभ्यते.

श्रीगणेशाय नमः ॥ आचम्य प्राणानायम्य देश-कालौ स्मृत्वा एवंगुणविशेषणविशिष्टायां शुभतिथौं, गोत्रः. नामधेयः, श्रीमान्गोत्रस्य नामधेयस्य मम इहजन्मानि गुरोरुपदेशितस्य दशाक्षरकामधेनुमंत्रासिद्धये इत आरभ्य विंशातिदिनपर्यंतं दिनेदिने नित्यकर्मानंतरं तद्देवताउद्दिश्य पंचोपचारपूजापूर्वकम् पंचसहस्रसंख्याकक्रमेण विंशातिदिने लक्षसमसंख्याकजपानंतरं जपदशांशतः, एतत्संकलपानंतरं दिनद्वयेन बिल्वफलशकलै बिल्वपत्रैर्वा दशसहस्रसंख्याकघृतपायससहितहोमानंतरं, पुनः दिनैकेन शुद्धजलेन सहस्रसंख्याकतर्पणं, ततःपरदिने एतन्मंत्रोच्चारणपूर्वकं स्वशिरासि शतसंख्याकमार्जनम्, ततः परदिने

दशसंख्याकब्राह्मणभोजनरूपपुरश्चरणकर्माहं करिष्ये ॥ ॐअस्य श्रीकामधेनुदशाक्षरमहामंत्रस्य वासिष्ठऋषिः, गायत्रीच्छंदः, श्रीकामधेनुर्देवता, क्लींबीजं, ह्रींश्रींशक्तिः, धेंकीलकम्, श्रीकामधेनुप्रीत्यर्थे जपे विनियोगः ॥ ॐक्लीं अंत्हृदयायनमः ॐह्रीं-तंशिरसे स्वाहा ॐश्रीं मंशिखायैवौषट् ॥ ॐधें अंकवचाय हुं ॥ ॐधेनवे नेत्रत्रयायवौषट्॥ॐनमः अस्त्राय फट्॥लोकत्रयेण दिग्बंधः ॥ पंचस्तनीं चतुःश्रृंगीं चतुष्पादां चतुर्भुजाम् ॥ चतुर्वर्गफलांदायीं भावितां सुरभिं भजे ॥ ॐलंपृथ्वीतत्त्वात्मिकायै श्रीकामधेन्वेनमः गंधं परिकल्पयामि नमः ॥ इति पंचोपचारैः पूजा ॥ अथ मनुः—ॐक्लींह्रींश्रींधें धेनवे नमः ॥ लक्षजपेन सिद्धिर्भवति ॥ ॥ इति श्रीकामधेनुकल्पः समाप्तः ॥ १० ॥

ॐ क्लीं ह्रीं श्रीं धें धेनवे नमः

# अथ दत्तव्याहृतिः प्रारभ्यते.

श्रीगणेशाय नमः ॥ ॐमिति व्याहरेत् ॥ ॐ नमो भगवते दत्तात्रेयाय, स्मरणमात्रसंतुष्टायेति, महाभयनिवारणायेति, महाज्ञानप्रसादायेति ॥ चिदानंदात्मने बालोन्मत्तपिशाचवेषायेति, महायोगिने अवधूतायेति, अनसूयानंदवर्धनायात्रिपुत्रायेति ॐ मिति व्याहरेत्, भवबंधविमोचनायेति आमिति व्याहरेत्, साध्यबंधनायेति ह्रीं मिति व्याहरेत्, सर्वभूतिदायेति क्रोंमिति व्याहरेत्, साध्याकर्षणायेति ऐंमिति व्याहरेत्, वाक्प्रदायेति क्लींमिति व्याहरेत्, जगत्त्रयवशीकरणायेति सौंमिति व्याहरेत्, सर्वमनःसंक्षोभनायेति श्रींमिति व्याहरेत्, महासंपत्प्रदायेति ग्लौंमिति व्याहरेत्, भूमंडलाधिपत्यप्रदायेति

द्रामिति व्याहरेत्, चिरजीविनेति वषडिति व्याहरेत्, वशीकुरु वशीकुरु वौषडिति व्याहरेत्, आकर्षयाकर्षय हुमिति व्याहरेत्, विद्वेषय विद्वेषय फडिति व्याहरेत्, मारय मारय नम इति व्याहरेत्, उच्चाटयोच्चाटय ठठ इति व्याहरेत्, स्तंभय स्तंभय खेमिति व्याहरेत्, संपन्नय संपन्नय स्वाहेति व्याहरेत्, पोषय पोषय, परमंत्र-परयंत्र-परतंत्राणि छिंधि छिंधि, ग्रहान्निवारय निवारय, व्याधीन्विनाशय विनाशय, दुःखान् शमय शमय, दुष्टान्मारय मारय, दारिद्र्यं विद्रावय विद्रावय, देहं पोषय पोषय, चित्तं तोषय तोषय, सर्वमंत्रस्वरूपाय, सर्वयंत्रस्वरूपाय, सर्वतंत्रस्वरूपाय, सर्वोपल्लवरूपायेति ॐनमः शिवायेति शिद्धाय स्वाहेत्युपनिषत् ॥ अनुष्टुप्छंदः, सदाशिवो ऋषिः, दत्तात्रेयो

